६; कै १,४; मना २,१२,३; भव ३, ३३; -गेन १संन्या २, ८९.

संन्यासयोग-युक्ता(क्त-आ)-त्मन्- -त्मा अन्न ५, ४७; गी ९,२८.

संन्यास-लक्षण- -णम् नाप ३, १६; या १,१.

संन्यास-विघ्न-कर्तृ- -र्ता १संन्या २,२.

संन्यास-विधि- -धिः नाप३,१; ५,१; -धिम् नाप २; ४,३८.

संन्यासा(स-अ)धिकारिन्- -रिणम्, -री नाप ३,१.

संन्यासा(स-अ)नन्तर- -रम् मैत्रे २,११.

संन्यासा(स-अ)र्ह- -र्हाः नाप ३,१; १संन्या २,३.

संन्यासो(स-उ)पनिषद्[११]- -षदम् १संन्या १,१.

संन्या(नि-आ)सिन्- -सिनः १संन्या २,५९[a];यार२,२;सार२९१:१८; -सिनम् १संन्या २, ६; -सिनाम् नाप ५,१; भव १,५८; गी १८, १२; -सी मैत्रि ६,१०[२]; जा ५; नि १;२; ५२; ५५; नाप १; मं ५,१,९; या २,१; नाउ ३,१३; सार २९०:१०; गुषो ४२१:४; पी ४२२ : १९; तारा ८३ : ७; गी ६,१.

संन्यासि-योगिन्- -गिनौ महा ६, ४८.

?संन्यासाप्रसवैकभूः[b] अक्षि २८.

स[c]-पङ्क्ति- -ङ्क्तिः इ १३ : १३.

स[d]-पचन- -नः रापू ५,९०.

सपत्न[f]- -त्नः बृ १,५,१२[२]; -त्नाः तै ३,१०,४; -त्नान् मना २,७९§[g]; सूता ३,१०§[h]; गी ११,३४.

सपत्ना(त्न-अ)तिव्याधिन्- -धिनौ बृ ३,८,२.

√सपर्>सपर्य्[i]

सप(र्य>)र्या[११]- -र्या गु २५; ७९.

स[d]-परशु-हरिण- -णम् द ५.

स[d]-परा(ग>)गा- -गाम् त्रिता १, ७७.

स[d]-परा(र-अ)पर-रहस्य- -स्यम् त्रिता २,६३.

स[d]-परिवार,रा- -०र व ४३८:१२; ४३९ : ९;१९; ४४० : ६;१७; ४४१ : ४;१५; ४४२ : २;१३; २३;४४३:११;-रः व४४४:२; १२;२२;४४५:११;२०;४४६: ९;१९; ४४७ : ७;१८; ४४८: ६;१८; -रम् नृउ ३,९; -राम् शि ६,१२२.

सपरिवार-क- -कस्य व ४३८:१३; २३;४३९ : १०;२०;४४०:७; १७;४४१ : ५,१५; ४४२ : ३; १४;४४३ : १;१०; ४४४ : ५; १५;४४५ : २;१३;२३;४४६: १२;२२;४४७:१०;२१;४४८: ९;२०;४४९ : १६;२३;४५०: ७;१४;२१; ४५१:७;१४;२१; ४५२ : ६; १४;२१.

स[d]-परिश्रय- -यः बृ ६,४,२३.

स[d]-पर्वत,ता- -तम् त्रिता १, २९; -ताम् नृपू १,३; वपू १,६.

स[d]-पात्र- -त्रम् कौ २,१५.

स[d]-पाद-

सपाद-कोटि-योजन—प्रमाण- -णम् त्रिवि ६,४.

स[d]-पार्ष्णिक- -कम् वपू २, २.

स[d]-पिष्ट- -ष्टान् मना २,६३§[j].

स[d]-पुष्पा(ष्प-अ)क्षत—तोय- -येन शि ६,७६.

सप्तन्[k]- -प्त मुं१,२,४;२,१,८[४]; बृ १, ५,१;२;२,२,१-३; गर्भ५; मना २,१२,१[४]§[l];२§[m]; नृपू ४,१५, १५; बृजा ४,२६; सुबा १; नाप ४,२४; मुद्ग १,६§[n]; रापू४,२२; -प्त-प्त मुं २, १, ८; -प्तभिः शौ ५३:१९;२०; शि७,१४०; सांसू ३,७३; सांका ६३.

सप्त-ऋषि- -षयः अन्ना २,८[३];९[५].

सप्त-क- -कम् रुजा १, १८.

सप्त-कला-

सप्तकला-मय- -यम् चक्र ८.

सप्त-कोटि-परि-सहस्र—परिमित- -ताः राधा १,८.

सप्त-कोटि-महामन्त्र- -न्त्रम् ते ३, ७३.

सप्त-कोटि-योजन—विस्तीर्ण- -र्णः राधा १,११.

सप्त-चक्र- -क्रे प्र १, ११.

सप्त-चत्वारिंशत्- -शद्भिः रार २, ९२.

सप्तचत्वारिंश- -शे अच्च ५.

सप्तचत्वारिंशद्-वर्ण-गुणा-(णा—अ)न्त- -न्तः रापू४,६४[o].

सप्तचत्वारिंशन्-मन्त्र- -न्त्रैः राउ ५,१.

सप्त-जन्म-कृत- -तात् इ १८:२२.

सप्त-जन्मा(न्म-अ)र्जित- -तम् त्रिब्रा २,१४८.

सप्तति[k]- -त्याम् सांका ७२.

सप्त-त्रिंशत्-

सप्तत्रिंश- -शे अच्च ५.

सप्त-दशन्- -श सांका४९; -शभिः शारी ५.

a) °न्यासे इति अब्या. । b) निसा.? 'अन्यासां प्रसवैकभू->-भूः' इति शोधः द्र. (तु. अब्या.) । c) =५स । d) =६स । e) 'ससपत्नजः' इति आन. । f) =शत्रु- । वैप१ यद्र. । g) तैआ १०,६३,१ । h) तैब्रा ३, ७,६,२१ । i) पा ३,१,२७ । j) तैआआ १०,६३ । k) वैप१ यद्र. । l) तैआ १०,१०,१[४] । m) ऋ ४,५८,३ । n) ऋ १०,९०,१५ । o) °शदर्णः गुणा° इति आन. ।

सप्तदश– -शः मैत्रि ७,३; छाग २३:१३;२४ : १५; -शम् २प्र ३२ : १५; गार ४०७ : ८;१४. -शे अत्र ५.
सप्तदशी– -शीम् त्रिता १, ८३.
सप्तदशा(श-अ)क्षर– -रः रार २,६२.
सप्तदशै(श-ए)क– -कम् सांसू ३,९.
सप्त-दिन– -ने यो २,३०.
सप्त-द्वारा(र–अ)वकी(र्ण>)र्णा– -र्णाम् नाप ३, ४३.
१सप्त-द्वीप[a]–
सप्तद्वीप-व(त्>)ती– -ती बृजा ६,१२; नृपू ५,१०; रुजा ३,१.
सप्तद्वीपा(प-अ)धिप– -पः वपू १, ६.
२सप्त-द्वीप[b]–
सप्तद्वीपा– -पाम् नृपू १, ३; वपू १,६.
सप्त–द्वीप-समु(द्र>)द्रा– -द्रायाः शि ६,९४.
सप्त-धा छां ७,२६,२; रार २,३९; योसू २,२७.
१सप्त-धातु[a]–
सप्तधातु-क– -कम् गर्भ २.
सप्तधातु-मय– -यः योशि १, ४०; -यम् योशि १,५६.
२सप्त-धातु[b]– -तुम् गर्भ १.
सप्त-धामन्– -मभिः नापू ३, ५६[c].
सप्त-प(द्>)दा– -दा महा ५, १[2]; -दाम् महा ५,२१.
सप्त-पुरी– -र्यः गोउ १९[2].
सप्त-प्रणव– -वेन बृजा ४,१.
सप्तप्रणव-मन्त्रित– -तम् बृजा ३,३०.
१सप्त-भूमि[a]– -मिषु वरा४,१; सार २७४ : ८.
साप्तभूमिक– -कम् महा ५,२३.
२सप्त-भूमि[b]– -मिः महा ५, ४३.
सप्त-म– -मः हं १६; तु ९[?d]; नापू १,६;५,७; -मम् नृपू २,६;त्रिता २,६१; त्रि ९; यो १,६०; दत्ता १, ६; सौ ३, १; योरा १५; इ १४:१९; ऊ ६४:७; नापू ६,४; गार ४०७ : ६;११; -मात् मुं१, २, ३[?e]; अशि ७, ७; महा ६, ८३[?f]; च २१:१३; शि ४,३१; -मे हं १९; गर्भ ३; अक्ष ५; त्रिता १, ६६; निरु १, १३; म ४९ : १८; सूता ५, १०; राधा २, ५; -मेन पिं १३.
सप्तमी– -मी नाद १०; नाप ८,१; महा ५,२५; अन्न ५,८५; ८६; ८९; अव्रि ४१; त्रिता ३, १०; वरा ४,१[2];२; १६; -मीम् महा ५, ३६[g]; अव्रि ४०; गोउ २६; -म्याम् नाद१५; रा ४२५: ५; वउ ६, ४३.
सप्तमी-रूप– -पः पारा १८.
सप्तम-चक्रे(क–ई)श्वरी– -री आथ ३९८ : १५.
सप्तम-भूमि– -म्याम् वरा ४,१.
सप्तम-श्रेणि– -ण्याम् सार२७०: १२.
सप्तमा(म-अ)क्षर– -रः तार२,१.
सप्तमा(म-आ)वरण– -णम् सार २८४ : ९.
सप्त-मातृ[h]– -तरः सूता ५,१२.
सप्त-माला(ला-अ)धिदैवत– -तम् रुजा २,८.
सप्त-रात्र– -त्रम् पप ४१९ : १३; भि ६; -त्रात् निरु १,९.
सप्तरात्रो(त्र-उ)षित– -तम् गर्भ ३.
सप्त-रात्रि[i]– -त्रौ व ४५९ : ५.
सप्त-रूप–विनिवृ(त्त>)त्ता– -त्ताम् सांका ६५.
सप्त(प्त-ऋ)र्तु-सप्तदश-षड्-रुद्र–सं(ख्या>)ख्य– -ख्यैः रार २, ९३.
सप्त(प्त-ऋ)र्षि– -र्षीणाम् गु १६.
सप्त-लोक– -कम् वउ ५,१३.
सप्त-वक्त्र– -क्त्रम् रुजा २,८.
सप्त-वार[j]– -रम् वपं ३११:३.
सप्त-वासर– -रम् यो २,२८.
सप्त-विंशति–
सप्तविंश– -शः शि १,१४;-शम् मन्त्रि १४; चू १३; -शे अन्न ५.
सप्तविंशति-तत्त्व–संबन्ध– -न्धम् पत्र २.
सप्तविंशति-धा भा ३२.
सप्तविंशति-वर्णक– -कः रार २,७७.
सप्तविंशति-वर्णा(र्ण–आ)त्मन्– -त्मा अन्न १,७.
सप्त-विध,धा– -धः महा ५,९;-धम् छां २, ८,१;३;९,१;८; १०,१; ६; करु ३८; -धस्य छां २,८,१; -धा मैत्रि ६,२२; -धाः गर्भ१[?k].
सप्त-वैध[l]– -धैः मन्त्रि ९.
सप्त-व्याहृति– -तिभिः शा १३[m].
सप्त-शत– -तम् निरु २,२.

a) द्विस. । b) बस. । c) ऋ १,२२,१६ । d) तु. गपू. पृ४७३k । e) °मान् इति पा.? यनि. शोधः द्र. [एतदनु गपू. (पृ७२६) सस्थ. 'लोक–>-कान्' इत्यत्र 'लोकात्' इति शोधः कर्तव्यः]। f) °मान् इति निसा.? यनि. शोधः द्र. (तु. JC.) । g) सा° इति अव्या. । h) उप. =२मातृ– । i) समासान्तस्य विकल्पः उसं. (पा ५,४,८७) । j) वा. क्रिवि. द्र. । k) दशवि° इति निसा.? यनि. शोधः द्र. (तु. अव्या.) । l) द्विस. उप. व्यु.? °ध्र– इति अव्या. । m) °तीभिः इति अव्या. ।

सप्त-सं(ख्या>)ख्य- -ख्यम् शि ४, १०.
सप्त-स्वर- -राः योशि ३,८.
§[a]सप्त-होतृ- -ता १शिसं ४; २शिसं १.
सप्ता(प्त-अ)क्षर[b]- -रः रार २,२५; नापू २,१०; -रम् नापू ३,८.
सप्ता(प्त-अ)ङ्ग[b]- -ङ्गः मां ३;४; नृपू ४,४;५; नृउ १,६;७; राउ ३, १[२]; वउ १,५;७; विद्या १;२.
सप्ता(प्त-आ)त्मन्[b]- -त्मानम् नृउ ३,९[i].
सप्ता(प्त-अ)र्चिस्[b]- -र्चिषः प्र ३,५.
सप्ता(प्त-आ)वरणक- -कम् राधा १, १४.
सप्ता(प्त-अ)श्व[b]- -श्वम् सूता १,२६.
सप्ताश्व-रथ-
सप्ताश्वरथिन्- -थिनम् सू ४![c].
सप्ता(प्त-अ)ह-
सप्ताहिक- -कम् व ४३३:१८.
सप्तो(प्त-उ)त्तर- -रम् गर्भ ५[d].
स°-प्रकट- -टम् त्रिता २,४९.
स°-प्रकृति- -तिः रार ५,७.
स°-प्रणव,वा- -वम् नृपू २,४; भ २, २८; -वया अव्य ४; -वाः महा १,१; -वाम् अना ११.
स°-प्र(?प्राण>)णा[f]- -णा मना २, ३५.
स°-प्रतिष्ठ,ष्ठा- -ष्ठा रापू ४,६०[g]; -ष्ठाः बृ ३,९,१९[२]; -ष्ठौ रार २,१०[g].
स°-प्रत्याधान- -नम् बृ २,२,१.
स°-प्रथस्- -थाः मना १, १०§[h].
स°-प्रपञ्चक- -कम् जाद १,३.

स°-प्रयोजन-
सप्रयोजन-ता- -ता गौ २,७;४,३२
स°-प्रसूतिक- -कम् वपू ३,२.
स°-प्रिय- -याणाम् वउ २,७.
स°-प्रेत-पिशाच- -चाः अव्य ७.
स°-फल- -लम् नार ६; -लानि राउ ५,४; का २.
साफल्य- -ल्यम् मु २,२,८.
स°-बाह्याभ्यन्तर- -रः मुं २, १,२; -रम् महा ५,१७२; मं ४,१,३; -रान् अन्न ३,१३; -रे ध्या ७; मं ४,१,३[३१]; महा ३,३१;६,१०; अन्न ५,२५;२६.
सबाह्याभ्यन्तर-व्यापिन्- -पी १संन्या २,२१.
स°-बिन्दु- -न्दुः रार ५,७.
सबिन्दु-मुख- -खम् सुमु ६.
स°-बिन्दुक- -कः सूता २,१५; -काः नृपू ५,८.
स°-बिल्व-रूप- -पम् बि १५.
स°-बीज- -जः योसू १,४६; -जान् नृउ ९,५.
सबीज-त्व- -त्वम् सांसू ५,११७.
स°-ब्रह्मन्- -ह्माणम् गोपू १८.
सभा[१०j]- -भाम् छां ८,१४,१.
१सभा-ग- -गे छां ५,३,६[k].
सभा-प्रपादिन्- -दिने नी ३,८.
सभा-स्थल- -लम् नाप ७; १संन्या २,७९.
§[l]सभेय- -यम् व ४४१:२१; ४४७:४; ४५१:१७; ४५४:२३.
२स°-भाग- -गम् पत्र २.
?सभाजयम्[m] व ४३३:१६.

स°-भाव-
साभाव्य-
साभाव्या(व्य-आ)पत्ति- -त्तिः ब्रसू ३,१,२२.
स°-भृत्य-परिचारक- -कः शि ६, १७५.
सभ्य[१२n]-
सभ्या(भ्य-आ)वसथ्य- -थ्ययोः नाप १,११[o]; कश्रु १,१.
सम्[p] द २[q].
१सम,मा[r]- -मः छां २,९,१[२]; बृ १,३, २२[s]; जा ६[t]; मैत्रे ३,३; ते ५, ६२; नाप ३,८६[u];५,११;६,२५; त्रिवि २,१६[t]; रापू २,१[u];४,५; १संन्या २, ३९; ७८; अन्न ३, १२; ५,४७; छाग २५ : १; शि ६,१९७; गी २,४८;४,२२;९, २९;१२,१८[३]; -मम् प्र ३,५;४, ४; छां २,१०,१; २; ३[२];४; ४, १,२; त्र्र १,६, १-३; श्वे २, ८; अना १७; मै २,७; बृजा ८,६[v]; १योत १११; नाप ४-५, ३८; त्रिव्रा २, ५५; योचू १०७[v]; शां १,४; ७,२२[v]; महा २,५४; ५९; योशि १, १४७; ६, ७५[v]; १संन्या २,७५; अन्न ५,१०७; अद्वि ३०; त्रिता ३,१२; यो १, २१[v];३,१४; वरा १,५;७[v]; ५, ६१[v]; मु २, २,११[v]; गोच ६८: १२; राधा २,९[v]; शि ३,७;६, १४५; ७, २३[v]; वउ ५, २९; भव ३, २५; गी ५, १९; ६, १३; ३२; १३,२७;२८; -मया महा २, ५७; १संन्या २, २६;

a) मा ३४,४ । b) बस. । c) °थितम् इति निसा.? यनि. शोधः द्र. (तु. अव्या.) । d) अष्टोत्तर° इति अव्या. । e) =६स । f) तु. गपू. पृ५६३b । g) उप. =आकार-बीजाक्षर- । h) 'सप्रथः' इति ऋ १,२२,१५ । i) सकृत् बाह्या° इति निसा. । j) वैप१ यद्र. । k) वैतु. शं., रामा. '२स-भाग->-गः' इत्यपि विकल्पमानौ । l) ऋ १,९१,२० । m) पा.? 'सभाजय' इति शोधः द्र. । n) व्यु.? =यज्ञाग्निविशेष- । o) °थ्योः इति निसा.? यनि. शोधः द्र. । p) =उपसर्गविशेष- । q) 'प्रम्' इति अव्या. । r) बप्रा. वैप१ यद्र. । इह =युगपत्(?द्)-, २समान- प्रभृ. । s) °मौ इति अव्या. । t) वैतु. उव्र. अन्यथाकल्पुकः । u) 'इदमों' इति आन. । v) वा. क्रिवि. द्र. ।

-मा गौ ३, २३; ४, ७७; ते १, ४५; योशि १,२३; अन्न १,२५; ५,५५;५६; -माः बृ १,५,१३; ते १,४३;महा४,१९; १संन्या २, २६; अन्न ५.२४; रुजा १, ११; सार २८७:१९; पी ४२२:१५; भव १,३६; -मान् रुजा १,१३; -०मे हंषो १७; -मे बृ ६,१,३[२]; श्वे २,१०; ते १,२८; महा ५, ५५; त्रिता ३,१३; १४; शि ५, १८; भव ३,२३; गी २,३८; -मेन निरु १,७; -मौ ब्रवि २२[a]; योशि १, ११६; तुअ १४; पप ४१९:८;१४; त्रिता ३,१४; यो १,७५; या २,१[२]; गी ५,२७.

साम्य- -म्यम् मुं ३,१,३; गौ ४,९३; १००; वरा २,७५; सौ २,१४; स ३७९ : १२; -म्यात् अन्न ४,१२; ब्रसू २,२,१३;-म्ये गौ ४,९५; गी ५,१९; -म्येन गी ६,३३.

साम्य-वैषम्य- -म्याम्याम् सांसू ६,४२.

साम्य-श्रुति- -तेः ब्रसू ३, ४,१९.

साम्या(म्य-अ)ग्नि- -ग्निना अन्न ५,७०.

साम्या(म्य-अ)वस्था- -स्था सांसू १, ६१.

सम-काय-शिरोधर- -रः योचू ७१.

सम-काल- -लम्[b] अन्न ४,८३; मु २,२,१०.

सम-ग्रीव-शिरः-काय- -यः यो १, ६; जाद३,३;५,५; वरा ५,३२.

सम-ग्रीव-शिरः-शरीर- -रःकै१,५.

सम-ग्रीव-शिरो-नासा(सा-अ)ग्र-दृश्- -दृक् शां १,५.

सम-ग्रीवो(व-उ)दर- -रःयो१,३२.

सम-चित्त- -त्तानाम् सार २३६ : २०.

समचित्त-त्व- -त्वम् गी १३,९.

सम-चेतस्- -ताः सार २६१:१७.

सम-ता- -तया महा ६, ४४; -ता नाप ३, ५४; महा ४, १६; ६, २-४; २९; १संन्या २,२७; अन्न ५,८५;१०८; गी १०,५; -ताम् गौ ३,२;३८; ते १, २८[c]; महा ४,३६; १संन्या २,३०; -तायाः अन्न ५,१११.

समता-वश- -शात् अन्न१,५४.

समता(ता-अ)वस्था- -स्था १योत २५; १०७.

सम-तेजस्- -जसम् पा ९,५.

सम-त्व- -त्वम् नाप ४,२४; सौ २, १६; गी २,४८;-त्वेन गौ२,५.

सम-दर्शन- -नः नाप ४, १३; ५, २५; १आ १३; गी ६,२९.

सम-दर्शिन्- -र्शिनः सार २८३ : १०; गी ५,१८.

सम-दुःख-सुख- -खः नाप५,३७; गी १२,१३; १४,२४; -खम् गी २,१५.

सम-दृश्- -दृक् पा ८,५.

सम-पर्वक- -कम् १संन्या २,९.

सम-प्रधान- -नौ त्रि १४.

सम-प्राप्त- -प्तम् गौ ३,४४.

सम-बुद्धि[d]- -द्धयः गी १२, ४; -द्धिः गी ६,९.

सम-भाव- -वः अध्या ४७.

सम-रस- -सः योशि१,१४६;-सम् योशि ६,३७;-साः महा.४,१९.

समरस-त्व- -त्वम् सौ २,१५.

समरसा(स-आ)भास- -सः अन्न ३,१२.

समरसी√भू

समरसी-भाव- -वम् ध्या ९१.

समरसै(स-ए)कत्व- -त्वम् योचू ६४.

सम-रूप- -पः मैत्रे ३,२४.

समरूपा(प-आ)त्मन्- -त्मा ते ४,३४.

सम-लोष्टा(ष्ट-अ)श्म-काञ्चन- -नः नाप ३,३४; गी ६, ८;१४;२४; -नाः भि ११; आश्र ४.

सम-सत्त्वौ(त्त्व-ओ)जस्- -जसौ त्रि १४[e].

सम-स्थ- -स्थाः पिंब्र १,४.

सम-हस्त-युग- -गम् वरा५,६१[f].

समा(म-अ)भिन्न- -न्नाः गौ ४,९३.

समा(म-अ)वस्था- -स्थाम् मु २, २,५२.

समी√कृ

समी-करण-

समीकरणो(ण-उ)न्नयन-ग्रहण-श्रवणो(ण-उ)च्छ्वास- -साः त्रिब्रा १, ६[g].

समी-कृत- -तम् त्रिब्रा२,८३[h].

समै(म-ऐ)कात्म्य- -त्म्यम् या २, १९[i].

२सम-

समा[j]- -माः ई २; बृ ५, १०, १; अव्य १;२[२]; सार २७६ : १७; २८६:६;गी६,४१;-माभ्यः ई८.

समा-शत- -तैः मु २,२,११.

समक्ष[k]- -क्षम्[b] गी ११,४२.

समग्र[k]- -ग्रः पा ८, ५; -ग्रम् वरा २, ४५; शा ३०[l]; पा ८, ५;

a) °मः इति अब्या. । b) वा. क्रिवि द्र. । c) °ता इति अब्या. । d) बस. । e) °त्त्वौ समो° इति निसा. अब्या. च पा.? (तान्त्रि. अप्यन्यथा) यनि. शोधः द्र. । f) °गः इति अब्या. संटि. । g) °णश्रप° इति अब्या.? यनि. शोधः द्र. (तु. निसा.) । h) °तौ इति अब्या. संटि. । i) सदैका° इति अब्या. संटि. । j) =१वर्ष- । वैप१ यद्र. । k) वैप१ यद्र. । l) 'कुलानाम्' इति अब्या. ।

शि६,७१; गी४,२३;७,१;११, ३०; -ग्राणि योशि ४,६; -ग्रान् गी ११,३०.

समग्र-शक्ति-खचित- -ते अन्न ५, ११३[a].

समग्रा(ग्र-अ)ग्रय-गुणा(ण—आ)-धार- -रम् अन्न ४,१९.

समम्(म्√अ)ज्

सम्-आज[११]- -जे सार २८६ : ८.

सम(म्√अ)ञ्च्

सम्य(मि[b]-अ)च्,ञ्च्- -म्यक्° प्र ५, ६; मुं १,२,१३; श्वे ६,२१; मैत्रि ६, ३७; अना १९; २९; अ ३; ते १, ३७; ६, १०९; ध्या ९२; नाप १[२]; ३,३९; ६,२; त्रिब्रा २, ३२; ४७; ९०; ९७; मं ४,१, ५; त्रिवि ५,१२[२]; ८, ६; १८; रार २,३९; रापू ४,५०; ६६; ९,७; राउ ५,२८; वा ४०; शां १, ३, १; १०; महा ६, १६; योशि १, ८९; ६,२; १संन्या २,४१; अन्न २,३८; ४,७२; यो १, ५३; २, १५; ३,३२; ग १८; जाद ३,२; ५,१; ३; ८; ६, ३३; प्रा २, १; वरा ३, २५; ४, १६; ४०; शा ३४; सौ २,३; सर २, ४; मु१, १,२४; ५०; ५२§[d]; २, २, १६; इ १९:१९; शि १,७; ७, ९३; गुषो ४२१ : ७; पी४२२ : २०; सांका ७१; गी ५,४; ८,१०; ९, ३०; -म्यञ्चि बृ ५,१३,३[२].

समीची- -ची व ४३७ : १५§[e].

सम्यक्-प्र(ज्ञा>)ज्ञ- -ज्ञस्य महा ४, ११२.

सम्यक्-संपन्न- -न्नः जा ६; नाप ३, ८६; पप ४१९ : ३; -न्नाः या २,१[f]; भि १५.

सम्यग्-अर्थ- -र्थः रार ५, ३.

सम्यग्-अवेक्षण- -णम् शां १, ७, २४.

सम्यग्-आलोकन- -नात् मु २, २,१७[g].

सम्यग्-ज्ञान- -नम् नाप५,३३; अन्न २, ३५; ५, ३३; जाद ६, १९; म ४९:१८; -ने ते२,४३; -नेन मुं ३,१,५.

सम्यग्ज्ञान-समालोक- -कः अन्न ५,२.

सम्यग्ज्ञाना(न-अ)धिगम- -मात् सांका ६७.

सम्यग्ज्ञाना(न-अ)वरोध- -धेन अन्न ५, ४९.

सम्यग्ज्ञानिन्- -निनः पाशु २, ३८.

सम्यग्-बन्ध-त्रय—स्थ- -स्थः वरा ५, ५६.

सम्यग्-बन्ध-समुद्भूत- -तम् योशि १, १००.

सम्यङ्-नाद-लया(य—अ)-वधि- -धि ध्या २३.

समञ्जस[h]- -सम् गौ ३,१३; ब्रसू ३, ३,९.

सम(म्-अ)ति √सृज्

समति-सृष्ट- -ष्टाः छां १,११,३.

सम(म्-अ)ती[ति√इ (गतौ)]

समती(ति-इ)त- -तानि महा ५, १६१; गी ७,२६.

समती(ति-इ)त्य गी १४,२६.

स[i]-मद- -दम् पा ८, ५.

सम्-अधि√*गच्छ, समधिगच्छति भव १, ५२; गी ३,४.

?समधीयीत[j] गा २३.

स[i]-मधु-घ्न- -घ्नम् त्रिता १, ४५[k].

सम(म्√अ)न्(प्राणने)

१सम्-आन[११]- -नः प्र ३, ५; ८; ४, ४; तै १, ७, १; छां ३,१३, ४; ५,२२,१; बृ १,५,३; मै २, ६; ७§[१५]; मैत्रि २,६; ६,३३; ७, ४; अना ३५; ३८; ध्या ५६; ब्रवि ६६; त्रिब्रा २,७७; ८१; ८६; योचू २४; शां १, ४; प्रा ४, १; जाद ४,२३; २९; ३१; -नम् मना २, ७०§[m]; सुबा ९[२]; १५; ध्या ९७; -नाय छां ५,२२,१§[n]; मैत्रि ६,९; मना २,६९§[o]; प्रा १, ६; -ने छां ५,२२,२; बृ ३,९, २६; मना२,६९[२]§[p]; ७०§[m]; प्रा१,६; -नेन सुबा ४; वरा ५,३८?[q].

समान-कर्मन्- -र्म शां १,४.

समान-जय- -यात् योसू ३,४१.

समान-प्राण- -णः ध्या ९९.

समान-योग- -गेन त्रिब्रा १,९.

समान-वायु- -युः, -युना शां १, ४.

समान-सं(ज्ञा>)ज्ञ- -ज्ञः मैत्रि २,६?[r].

समाना(न-आ)त्मन्- -त्मने गोउ ६४[२].

समानो(न-उ)दान-व्याना(न-अ)-पान-प्राण- -णाः त्रिब्रा १, ५१[s].

स[t]-मनस्- -नसः व ४३७ : ११§[u].

a) समस्तश° इति अज्या. । b) सम् >समि (पा ६,३,९३)। c) क्वचित् वा. क्रिवि. द्र. । d) विध २९,१०। e) ऋ १,६९,१ । f) °न्नः इति अज्या. । g) °लोच° इति निसा. । h) वैप१ यद्र. । i) =६स । j) पा. वा.? । k) °मदु° इति निसा. संटि. । l) =वायुविशेष- । वैप१ यद्र. । m) तैआ १०, ३६, १ । n) तैआ १०, ३३, १ । o) तैआआ १०, ६९ । p) तैआ १०, ६९[२] । q) °नोऽग्ने° इति निसा.? यनि. शोधः द्र. (तु. अज्या.) । r) °ज्ञा इति पा? यनि. शोधः द्र. (तु. सात.) । s) °दानो व्यान° इति अज्या.? यनि. शोधः द्र. (तु. निसा.) । t) =५स । u) ऋ १०,१०१,१ ।

स°-मनस्क- -स्कः क १,३,८.

सम्-अनु-प्र√विश्
समनुप्र-विष्ट- -ष्टः मना १,१६[b].

सम्-अनु-प्रा(प्र√आ)प्
समनुप्रा(प्र-आ)स- -से ते ६,१०१; रार ४,११.
समनुप्रा(प्र-आ)प्य गौ २,३६.

समन्त°- -न्तम्[d] बृ १, ३, १८; ३, ३,२[2]; -न्तात्[d] ग ४; ब ४; तुल ७७:३; शि ६,७६;८१;१५२; सि ६,३३; गी ११,१७;३०.
समन्त-तस्(>:) गौ ३, २; ३५; त्रिवि ६,६;७,१९; पै४,१४; शि ४,१४; गी ६,२४.

स°-मन्त्र- -न्त्रम्[d] वउ ६,६.

सम्-अन्वा(नु-आ)√रभ्,>रम्भ्, समन्वारभेते बृ ४, ४, २; निरु २,५.
समन्वा-रम्भण- -णात् ब्रसू ३,४,५

सम्-अन्वा(नु-आ)√लभ्, समन्वा-लभध्वम् शौ ५१ : १०.

सम्-अन्वि[नु√इ(गतौ)]
समन्व(नु-अ)य- -यात् सांसू १, १३१; सांका १५; ब्रसू १,१,४.
समन्वि(नु-इ)त- -तः त्रिवि ६,२५; निरु १,१९; -तम् १योत ८६; ८९; मु १, १,१; -तेषु त्रिवि ६, २३.

सम्-अभि√धा
समभि-हित- -तम् २प्र ३६ : ८.

सम्-अभ्य(भि√अ)र्च्
समभ्य(भि-अ)र्च्य त्रिवि ७, १; सर ३,८; पी ४२२ : १२.

सम्-अभ्य(भि√अ)स्(क्षेपणे), समभ्यसेत् अना २३; ते १,३८; ३, ७४; १योत ४३; ६७; १०४; ११४[e]; त्रिब्रा २, १०१; योचू ८७; १०६; मं ५, १,३; शां १, ७,२; ३७; योशि ६,७; ७५; यो २,२; ३,१३[2]; जाद ६,६; १०; ११; २०; गोपू ३१; वरा २,३; ५,५५; शि ७,६१.
समभ्यस्ये निरु १, २०.
समभ्य(भि-अ)सन- -नेन सार २३२ : ८.
समभ्य(भि-अ)स्त- -स्तैः अन्न ४, ८४.
समभ्य(भि-अ)स्य १योत ११४; योचू ६७; मु १, १, २८.

सम्-अभ्या(भि-आ)√दा(दाने)
समभ्या-ददान- -नः बृ ४, ४, १.

१-२समय- समि द्र.

स°-मरुद्-गण- -णः गोपू ३३.

सम्-अर्घ- -र्घम् इ १७ : १.

सम(म्√अ)र्च्>र्चि, समर्चय वि ७.

सम(म्√अ)र्थ्
सम्-अर्थ- -र्थः गर्भ ३; नाप २; ३, ६८; महा ४, १०५; हंषो २; -र्थम् महा ४,१०५; -र्थानि करु ३३.
सामर्थ्य- -र्थ्यम् १योत ५५; ५६; गी २,३६.
सामर्थ्य-शक्ति- -क्तिः सौ ३,१.

सम(म्√*अ)र्ध्>र्धि
सम्-अर्धयितृ- -ता छां १,१,८.

सम(म्√*अ)र्प्>र्पि, समर्पयामि वउ ६, ३०; समर्पयेत् बृजा ६, ७; सार २२७ : १४.
सम्-अर्पयत्- -यन् सौ २,११.
सम्-अर्पित- -तम् मुं २,२,१; छां ७,१५,१; बृजा ६,१; योशि १, ७५[f]; -ताः छां ७,१५,१; बृ २, ५,१५[2].
?समर्पितव्यअनसंयुक्त- -क्तम् शां १,४[g].
सम्-अर्प्य त्रिवि ६,२१; २५; सूता ५,१४.

सम्-अव√नी, समवनीयन्ते बृ ३, २,११.

सम्-अव√ली,समवलीयन्ते नृउ ५, १-३; सुबा ३.

सम्-अव√लोक्
समव-लोकित-
समवलोकित-सम्यग्-अर्थ- -र्थः अन्न २,४४.
समव-लोक्य त्रिवि ६,१;१०.

सम्-अव√स्था
समव-स्थित- -तः ब्रवि ३३[h]; -तम् पै ४,२२; सौ २,१९; गी १३, २८; -ते वरा २,६६.

सम्-अव√हृ
समव-हारम् छां ६,९,१.

सम्-अवा(व√आ)प्, समवाप्नोति नाप ३,१; समवाप्नुयात् १योत १०६.
समवाप हे १४.

सम्-अवे[व√इ(गतौ)]
समवा(व-अ)य- -यः सांसू ५,९९; -यम् शारी १.
समवाया(य-अ)भ्युपगम- -मात् ब्रसू २,२,१३.
समवे(व-इ)त- -ताः सार २६२ : १८; गी १, १; -तान् गी १,२५.

सम(म्√अ)श्(व्याप्तौ), समश्नुते क २,३,१४; तै २,५-६,१; बृ ४, ४,७; ध्या १०६; १योत १३४; शा २योत १,५; त्रिता ४,२५; गोच २५; गोच ६७ : २१.
समाशत सु २९३ : १८[i].

सम्-अष्टि- -ष्टिः बृ ३,३,२; नाप ८,१.

a) =६स । b) तैआ १०,१,१ । c) वैप१ यद्र. । d) वा. क्रिवि. द्र. । e) अभ्य° निसा., अज्ञ्या. संटि. । f) 'विसर्पति' इति आन. । g) निसा.? °तं व्य° इति शोधः द्र. (तु. अज्ञ्या.) । h) गपू. (पृ१०४) अव√स्था> अवस्थित-> -तः इत्यत्र यनि. शोधः कर्तव्यः । किमव° इति अज्ञ्या. । i) ऋ ९,८३,१ ।

समष्टि-त्व- -त्वात् सर ३,१६.
समष्ट्य(ष्टि-अ)ण्ड- -ण्डम् पै १,२६.
सम(म्√अ)स्(क्षेपणे)
सम्-अस्त,स्ता- -स्तः छां ८,६,३; ११,१; पा १०,२; -स्तम् अ १; ध्या १००; त्रवि ३२; महा ६, १२; वरा ३,१४; पा १,७;८;८, ६;७; ९,२; सिशि ३८२:१४; -स्तस्य छां २,१,१; अन्न४,३५; रुद्व ४८;-स्ता अन्न ४,६२;-स्ताः त्रिवि ६,१; अन्न ४,७१; पा ८, ८[2];१०; सिशि ३८२:६; -स्तान् अ ३; भव१,२४;-स्तानाम् बृजा ३,१; शि २,२७; -स्तेषु नाप ६, २५; योशि २,१०; -स्तैः शि ५, २५.
समस्त-कुल-ज- -जैःशि६,६९
समस्त-कुल-संयुत- -तः शि ६,१७५.
समस्त-दिव्य-मङ्गल-नि-दान- -नम् त्रिवि ७,६.
समस्त-दुःख-दुरित- -तम् व ४५६:१७.
समस्त-दुरित-क्षय-कर- -रम् त्रिवि ७,४९.
समस्त-नष्ट-संकल्प- -ल्पः सौ २,१६.
समस्त-नाम-रूप-कर्मा-(र्म-अ)तिदूर-
समस्तनामरूपकर्मातिदूर-ता- -तया त्रिवि ८,८[a].
समस्त-पातको(क-उ)पपातक-महापातक-
समस्तपातकोपपातकमहा-पातका(क-अ)गम्यागमन-गो-हत्या-ब्रह्महत्या-भ्रूणहत्या-वीर-हत्या-पुरुषहत्या(त्या-आ)जन्म-कृतहत्या-स्त्रीहत्या-गुरुहत्या-पितृहत्या-प्राणहत्या-चराचर-हत्या(त्या-अ)भक्ष्यभक्षण-प्रति-ग्रह-स्वकर्मविच्छेदन-स्वाम्यार्ति-हीनकर्मकरण-परधनापहरण-शूद्रान्नभोजन-शत्रुमारण-चण्डालीगमना(न-आ)दि-
समस्तपाप-हरणा(ण-अ)र्थ- -र्थम् गार ४०८:२.
समस्त-पाप-निर्मुक्त- -क्तः शि ६,१६८;१७५.
समस्त-ब्रह्मतेजोराशि-
समष्टि-रूप- -पम् त्रिवि ७, २९.
समस्त-ब्रह्म-वाचक-वाच्य- -च्यः त्रिवि १,११.
समस्त-ब्रह्माण्ड-जाल- -लानि त्रिवि ६,१०.
समस्त-ब्रह्माण्ड-समष्टि-जननी- -नीम् त्रिवि ६,१०.
समस्त-ब्रह्माण्डा(ण्ड-अ)न्तर्-बहिस्(>ः) त्रिवि ६,१०.
समस्त-भुवन- -नस्य सी १९.
समस्त-भृत्य-संयुक्त- -क्तः शि ६,९२.
समस्त-महापातको(क-उ)पपा-तक- -कात् श ३६.
समस्त-मोक्ष-साम्राज्य-पट्टा-(ट्ट-अ)भिषेक- -कम् त्रिवि ६, २५.
समस्त-याग- -गानाम् पाशु १, ११.
समस्त-याता(त-आ)यात-वर्ज्य- -र्ज्यम् भा ३७.
समस्त-विद्या-जाल- -लानि त्रिवि ६,१; वरा १,१.
समस्त-विषय- -याणाम् भा३५
समस्त-वेद-वेदान्त-सार-निर्माण- -णम् म ४८:२.
समस्त-वेद-शास्त्रे(स्त्र-इ)-तिहास-पुराण- -णानि त्रिवि ६, १; वरा १,१.
समस्त-व्यष्टि-मस्तक- -कान् पै १,२९[b].
समस्त-साक्षि°- -क्षिम् कै १,७; २,५.
समस्त-साक्षिन्- -क्षी त्रवि१०७
समस्त-स्वरूप-विरोध-कारि-(न्>)णी- -णी त्रिवि ६,१६.
समस्ता(स्त-अ)घ-शासक[d]- -कम् भ १,५.
समस्ता(स्त-अ)रिष्ट-शान्ति- -न्तये नि ३.
समस्ता(स्त-अ)र्थ-जाल- -लेषु महा २,६२; वरा ४,२७.
समस्ता(स्त-अ)वयव- -वेभ्यः भव २,२९.
समस्ता(स्त-अ)विद्या(द्या-अ)-ण्ड-व्यापक- -कः त्रिवि २, १५.
समस्ता(स्त-अ)विद्या(द्या-आ)-पादक- -कः त्रिवि ६,१२.
समस्ता(स्त-अ)विद्यो(द्या-उ)-पाधि- -धिः त्रिवि २,४.
समस्ता(स्त-अ)साधारण-चिह्न-चिह्नित- -तः त्रिवि ५, १२; ७,१५.
समस्ता(स्त-अ)साधारण-दिव्य-भूषण- -णैः त्रिवि ५, १२.
सम्-आस- -सः छां ६,४,७; -सेन भ २, २[e]; गी १३,३;६; १८, ५०.
सामासिक- -कस्य गी १०, ३३.
समास-तस्(>ः) १योत २१;

a) °स्तकर्मा° इति निसा. । b) व्यष्टि° इति अड्या. । c) उप. =साक्षिन्- । d) उप.<√शस (हिंसायाम्) । e) °मानेन इति अड्या. ।

योशि १,८९; यो १,१९; जाद ५,१;२; शि १,३७; ४,३२; ६, २८४; ७,१; १३६; सांका ५३; गी १३,१८.

सम्-आसम् छां ७,१५,३.

समा- २सम- द्र.

सम्-आकुल[a]- -लः सार २६०:१९; -लम् सि ६, १३; २०; -ले शि ७,७०.

सम्-आ√कृ

§[b]समा-कृत- -तम् व ४६१ : ३; ४६४:२०.

सम्-आ√कृष्

समा-कर्ष- -र्षात् व्रसू १,४,१५.

समा-कृष्य त्रिब्रा २, १३०; शां १, ७,१४; ४३; योशि १, ९१; यो १,२४; जाद ६,२२;४०; ७,६; ७;१३; वरा ५,६३.

सम्-आ√क्रम्

समा-क्रम्य १योत ११६; मु २, २, ४२.

सम्-आ√ख्या

समा-ख्यात,ता- -तः नाप ३,५६; रापू ४,५६; जाद ७,१४; -तम् रापू ४,६७; यो ३,८;सांका६९; -ता वरा ६,२९.

सम्-आ√*गच्छ्,गम्, समागच्छतः छां १,१,६; अव्य १?[c].

समा-गत,ता- -तः जाद ४, ४२; ४६; सार २३० : ८; -ताः सार २४२ : ४; गी १,२३.

समा-गत्य शु १,८[d].

समा-गम- -मः मैत्रि ७,११.

सम्-आ√*गृह्(>भ्), आ…सं-गृभाय बपू १,४९[e].

सम्-आ√चर्,समाचर अन्न ४,८२; मु २,२,९; गी ३,९;१९; समाचरेत् बृजा ४,२;७; काला १०; त्रिब्रा२,५२;५३;९४; शां १,३, १२; यो २, ३१;४७; जाद ५, १२; १३; जाबा १९; इ १३ : ११; सूता २, २२; गोच ६८ : ११; शि ६,३६; भव ५,१०.

समा-चरत्- -रन् गी ३,२६.

समा-चार- -रात् गौ ४,४२;४४[२]; -रे व्रसू ३,३,३.

समाज- समज् द्र.

सम्-आ√ज्ञा

समा-ज्ञा- -ज्ञाः तै ३,१०,२.

स[१]-मा(त्रा>)त्र- -त्रान् रार १,७[f].

स[१]-मात्र(तृ-त्र)ष्टक- -कम् त्रिता २,४९.

सम्-आ√दा(दाने),समाददीत बृ ४, २,१.

समा-दाय व्रबि २१; बृजा४,१; व्रवि ५८; योशि ५,२५; यो २, २९; शि ६,१६१; अबि २१.

सम्-आ√दिश्,समादिशेत् पिंब्र ६, १०.

सम्-आ√धा, समाधत्स्व पिंब्र १,७; समाधेहि अध्या २६; समादध्यात् ध्या २३.

ϕसमा-दधान- -नाय पा ३, ९[h].

समा-धातुम् अध्या ५९; गी१२,९.

समा-धान- -नम् महा ४, ७§[१५].

समाधान-जाप्य- -प्याभ्याम् मु २, २,२०[i].

समा-धाय अन्न ४, २;५; त्रिता ३, ७; ५,२०; गी १७,११.

समा-धि[११]- -धिः गौ ३,३७; मैत्रि ६,१८; अना ६;१७; ते १,१६; ३७§[१५];ध्या४१; १योत२५६§[१५]; १०५; १०७§[१५]; त्रिब्रा २, ३२§[१५]; १६२§[१५]; योचू २; ११२§[१५]; मं १, १, १०§[१५]; शां १,१;११; पै ३, १§[१५]; महा ४,६१;६२; अन्न १,२८§[१५];५, ७५§[१५]; अध्या३५; १अव२१[२]; २अव ३३८:२; जाद १,५;१०, १;५; मवा ७; वरा २, ७५; ५, १२; सौ २,१४-१८; सर३,२५; २७-३०; मु २,२,५४-५६; भव ३, ३०§[१५]; योसू १, ४६;५१; ३,३§[१५]; ४, २८; -धिना नाद ५४; योशि ६,७५; अध्या १७; -धिभिः सर ३, ३१; -धिम् व्रवि ६५; १योत१०६; पै३,१;अध्या ३८; यो ३, १४; जाद १०, १; सर ३, २५; मु २, २,१९; -धौ आरु २; ते १, ४०; योचू १०; ११०; ११३; मं २, ३,४; सार २४३ : ८; योसू ३, ३८; गी २, ४४; ५३.

समाधि-क- -कः योरा २.

समाधि-काल- -लात् अद्वि४५.

समाधि-द्वितय- -यम् ते५,३४.

समाधि-निर्धूत-मल- -लस्य मै ४,४,९[j]; भव ३,३१.

समाधि-निर्धौत-मल- -लस्य मैत्रि ६,३४[k].

समाधि-नि(ष्ठा>)ष्ठ- -ष्ठःनाप२.

समाधिनिष्ठ-ता- -ताम् अध्या १६.

समाधि-परिणाम- -मः योसू ३,११.

समाधि-भावना(न-अ)र्थ- -र्थः योसू २,२.

समाधि-विरम- -मे मु १,१,३.

समाधि-शब्द- -ब्देन महा ४, १२; अन्न १,४८-५०.

समाधि-शून्या(न्य-आ)त्मन्- -त्मा ते ४,७६.

a) तु. गपू. पृ१३०C। b) ऋ १०,८४,७। c) °मग° इति निसा.? यनि. शोधः द्र. (तु. अध्या.)। d) °म्य इति अध्या.। e) ऋ ८,८१,१। f) =६स। g) 'मन्त्रान्' इति अध्या.। h) वैतु. पाटी. सन्ते(म्,ते) =सन्त->न्ते (सप्त१) इति ?। i) ससाधा° इति निसा.। j) °निर्धौ° इति मैत्रि ६,३४। k) °निर्धू° इति मै ४,४,९।

समाधि-सिद्धि- -द्धिः योसू २, ४५.

समाधि-सुषुप्ति-मोक्ष- -क्षेषु सांसू ५,११६.

समाधि-स्थ- -स्थः सुबा १३; अन्न ५, ८०; जाद १०, ११; -स्थम् शि ७,६; -स्थस्य अन्न १, २६; गी २,५४.

समाधि-हानि- -निः सांसू ४, १४.

समाध्य(धि-अ)भाव- -वात् ब्रसू २,३,३९.

समाध्य(धि-अ)र्थ- -र्थम् महा २, ७५.

समा-हित,ता- -तः बृ ४, ४,२३; बृजा ३,५; ४, १७; सुबा ९; क्षु ६; ध्या ९९; ब्रवि २२; नाप ३, २३; ६,१८; त्रिब्रा२,३८[a];९२; ११५; १२०[b]; १४६; पै ३, १; योशि ५,३९; अन्न १, ३७§[१५]; जाद ५,४;७,२;१३; गोउ२८; सार २७८ : १; शि ७, ४५; गी ६,७; -तम् छां ८,१,३;४; -ता अन्न १,४८; -ताः छां ८, १,५; मैत्रि ६,३०;३५;३८; नृउ६,४; प्रा ४,१[c]; -ते छां ८,१,३.

समाहित-मनस्- -नाः योशि५, १; जाद ६, ३२.

समाहिता(त-आ)त्मन्- -त्मा बृ ४,२,१.

१समान- समन् द्र.

२समान,ना[d]- -नः मां १०; छां १, ३,२; बृ ४,३,७; नृउ २,६; शा ५; सांसू १,६९; ब्रसू ३,३,१९; -नम् सुं ३,१,१§[e]; बृ ६, ५,४; श्वे ४,६§[e]; नाउ१,३६§[e]; भव २, २६[e]; सांसू ३, ५३; ५,२४; -ना तु ९६§[११]; ब्रसू ४, २, ७; -नाः स्व ६१:९; -नानाम् अव्य ५[२]; -ने मुं ३,१,२; श्वे ४,७; ब्रसू३, ३, ५.

सामान्य- -न्यः अक्षि२०;२४[f]; -न्यम् गौ १, २२; सांका ११; -न्यस्य सांसू ५,९१; -न्यात् ब्रसू ३,२,३२; ३,५१; -न्यानि रुजा १, १४; -न्येन महा ४, ११८; सांसू १,१३८.

सामान्य-करण-वृत्ति- -त्तिः सांसू २,३१; सांका २९.

सामान्य-तद्-भाव- -वाभ्याम् ब्रसू ३, ३, ३३.

सामान्य-तस्(>:) सांसू १, १०३; सांका ६.

सामान्य-भक्ति- -क्तिः सार २५० : ३.

सामान्या(न्य-अ)सङ्ग-नाम-क- -कम् अक्षि २१.

समान-कर्म-योग- -गे सांसू२,४७.

समान-गुण- -णाः सार २९१:२२.

समान-त्व- -त्वम् ते १,२८; सांसू १,५५;८६;६,६५.

समान-धर्मा(र्म-आ)पत्ति- -त्तौ सांसू १,५०.

समान-नाम-रूप-

समाननामरूप-त्व- -त्वात् ब्रसू १,३,३०.

समान-न्याय- -यात् सांसू ५,३६.

समान-फल-(द>)दा- -दा तारा ८३ : ८.

समान-लोक-

समानलोक-ता- -ताम् मना २, १५§[h].

समान-सं(ज्ञा>)ज्ञ- -ज्ञम् शि७,२२

समाना(न-अ)भिहार- -रात् सांका ७.

स[i]-मान(द>)दा[i]- -दा रापू ४,५८.

सम्-आ√नी,समानयति मैत्रि २,६.

सम्√आप्,>आपि, आपिपयिषु, समाप्नोति क्षु २५; नाप ५,१; वरा ४,४१; समाप्नोषि गी ११, ४०[k].

समाप्यते नाप ३,६१; पिंब्र१,८.

समापयति कौ २,१५.

समापिपयिषेत् बृ १,५,२३.

सम्-आपयितव्य- -व्यः कौ२,१५[२].

सम्-आप्त- -प्तम् २प्र ३६ : ६.

सम्-आप्य नाप ३, ११; ७७; ४, ३८[२]; ५,१; १संन्या २,१३; पप ४१८ : ३; कुं४[l]; या १, १; सौ २,२१[m]; बि ९.

सम्-आ√पद्

समा-पत्ति- -त्तिः योसू १,४१.

सम्-आ√बन्ध्

समा-बध्य वरा ५, ३७.

समाभिन्न- १सम- द्र.

सम्-आ√म्ना>मन्, समामनन्ति २प्र ३५ : ८.

स[i]-मा(या>)य- -यम् रार ५, ६; पी ४२१ : ८; वपू ३, १; २; -यात् रार ५, ८.

सम्-आ√या, समायाति योशि १, १०४; समायान्ति त्रिवि५,१२; १३.

समाययौ रापू ४, २५; २७;

समाययुः रापू ४,११.

समा-यात,ता- -तः योशि १,२१; -ता सार २४३ : १८; -ताः सार २४३ : १५.

a) °सितः इति अज्या.संटि.। b) °तम् इति अज्या.संटि.। c) अधिसमा° इति अज्या.संटि.। d) =१सम-। वैप१ यद्र.। e) ऋ १,१६४,२०। f) =मात्राविशेष-। g) समा° इति निसा.। h) तैआ १०,१४,१। i) =६स। j)उप.=आकार-वी जात्तर-। °युता इति निसा.,अज्या.पा.?यनि.शोधः द्र.(तु.गपू.पृ४००h)। k)'संव्याप्नोषि'इति SCHR. पाभे. [वैतु.बे.(NIA २,२३१)]। l) °मारोपः इति अज्या.। m) °पथ्य इति निसा. अज्या. च पा.?यनि. शोधः द्र.।

सम्-आ√युज्
समा-युक्त- -क्तः त्रिब्रा २, १५२; -क्तम् १योत ११; योशि १,९; पं १०.
सम्-आ√रभ्,>म्भ्,समारभेत् शां १,५; वरा ५,३९.
समा-रभ्य त्रिब्रा२,१४९;१५१;वरा २,४२.
समा-रम्भ- -म्भाः गी ४,१९.
सम्-आ√रम्
समा-रत- -ताः छां १,१०,११.
सम्-आ√राध्
समा-राधन- -नम् सार २२०: १५.
समाराधन-तत्पर- -रः सार २२०: १५; २२१: ९.
समा-राध्य त्रिवि ५,१४; ६,१९.
सम्-आ√रुह्,>रोपि,समारोपयेत् आरु २[२]; १संन्या १,१; २संन्या १७: ७; कश्रु १,१.
समा-रुह्य कौ ३,६[e]; योचू ७१;वरा ४,१४.
समा-रूढ- -ढः नाद ५.
समा-रोप्य नाप ८,५; शां १,७,४३; १संन्या १,१;२,१००;पप४१८: १९; जाद ६,३१; वरा ५,५९[a]; सौ २,११; कश्रु १,१.
सम्-आ√लिख्,समालिखत् रापू ४, ४९; सुता ५,४; नापू ६,४.
सम्-आ√लिङ्ग्
समा-लिङ्ग्य मं ३,२,२.
सम्-आ√लिप्>म्प्, समालिम्पेत् नृजा ४,९.
सम्-आ√लोक्>लोकि, समा-लोकय महा ३.४०: या २,६.

समावस्था- १सम- द्र.
सम्-आ√विश्,>वेशि, समा-वेशयति सार २३८: ९.
समा-विष्ट- -ष्टम् मु २,२,६.
समा-वेश्य शि ६, १३४; वउ ५, ३२.
?समाविशत्[b] नाप ५,१.
सम्-आ√वृ(आच्छादने)
समा-वृत- -तम् योशि १,१३७[c]; सि २,७; ३,३.
समा-वृत्य यो २,३६,
सम्-आ√वृत्>वर्ति,समावर्तयति छां ४,१०,१.
समा-वर्तयत्- -यन् छां ४,१०,१.
सम्-आ√वेष्ट्
समा-वेष्ट्य त्रिब्रा २, ६४; शां १, ४; जाद ४,१३[d].
सम्-आ√श्रि,समाश्रये मु २९३:८; गु ७३; समाश्रय अन्न ५,२३; ३०;३१; मु २, २, १५; समा-श्रयेत् त्रु ७;९; योशि ६,२३; यो २,४;१३;२७; जाद ३,१२; भव १,३४.
समा-श्रित- -तः मैत्रि ६, ९; मना २, ७१§[e]; ब्रवि ४१; -तम् शि ६,१४०; -ताः सार २९२:१८; -तानि महा १,१.
समा-श्रित्य नि २; योचू २१; भव १,५४.
सम्-आ√श्वस्
समा-श्वास-
समाश्वास-वत्- -वान् महा ५, १६८.
समा(म्√आ)स्,समासते श्वे४,८§[f]; वृजा ६,१२§[f]; नृपू ४,९§[f]; ५, ९§[f]; नृउ७,१३; राउ५,२९§[f]; व २४§[f]; गु ५३§[f].
सम्-आसीन- -नः त्रिब्रा २, ५०; शां १, ३,१; जाद ३, ६; -नम् त्रिवि ५,१४; रार १,७;२,४५; -नाः सि १,१५?[g].
समास- समस् द्र.
सम्-आ√सञ्ज्
समा-सक्त- -क्तम् मै ४,४,५; मैत्रि ६, ३४; मैत्रे १, ४, ७; शा २; भव ३,१५.
सम्-आ√सद्>सादि
समा-साद्य योशि१,७७;शि५,२६.
समासम् समस् द्र.
सम्-आ√स्था
समा-स्थाय महा ३,५७; शि ७,४; भव ३,२४.
समाहित- समा√धा द्र.
सम्-आ√हृ,समाहरेत् अन्न ४,८५[h]; शि ७,२६.
समा-हर्तुम् गी ११,३२.
समा-हार- -रात् ब्रसू ३, ३,६३.
समा-हृत्य नाप ३, ७४; त्रिब्रा २, ११५; जाद ८,९.
समि[म्√इ(गतौ)], समेति बृ ६, २, २§[i]; सम्…एति श्वे ४, ११; संयन्ति छां ४, १, ४; ६; अरु ३२§[j]; सम्(एमि) बा ९; समेतु कौ २, ८§[k]; व ४३७: ८§[k]; सम्[२]…यन्तु कौ २, ८§[l]; स-मैताम् बृ १,५,१२.
समेष्यामि १संन्या २,५३.
समीयते नाद ४८[m].
सं-यत्[n]-
संयद्-वाम- -मः छां ४,१५,२

a) सदारो° इति अज्या. । b) पा.? °विशेत् इति अज्या. । c) °हितम् इति निसा. संटि. । d) सदावे° इति निसा. संटि., अज्या. । e) तैआ १०,३८,१ । f) ऋ १,१६४,३९ । g) °सीनान° इति पा.? यनि. च अन° इति च द्विपदः शोधः द्र. । h) °चरे°, °रमे° इति अज्या. संटि. । i) ऋ १०,८८,१५ । j) तैआ १,२७,५ । k) ऋ १,९१,१६ । °मेत्तातु इति अज्या.? । l) ऋ १, ९१, १८ । सत्वय° इति अज्या. । m) 'समीर्यते' इति अज्या. । n) वैतु. MW. <सं√यत् वा सं√यम् वा ।

१सम्-अय[a]- -यः सार २४२:११; पा ८, ३; -याव् पा ८, १०; -ये रुजा ३, १; सार २३८:७; २४०:१७;२५७:१४; २८५: ३; १६; २८६:१८.

समय-भ्रान्ति-हरण- -णम् निर्वा २९०:१३[b].

समयो(य-उ)चित- -ताः सार २३७:२२; -तानि सार २२३: १२.

२सम्-अय[c]-

समया(य-आ)चार-संगति- -तिः सी २९.

सम्-इति[13d]- -तिम् छां ५, ३, १.

समितिं-गम- -मः बृ६,४,१८.

समितिं-जय- -यः गी १,८.

§[e]सम्-इथ[f]- -था व ४६६:१५.

समि(म्√इ)ङ्ग्>ङ्गि,समिङ्गयति बृ६, ४,२३[g].

समि(म्√इ)ध्, न्ध्,>न्धि, §[h]समिन्धते आरु५; बृजा ८,६; नृपू ५,२१; सुबा ६; पै ४,२३; स्क १५; राउ ५,२९; ता ३,९; वरा ५,७७; मु २, २, ७७; सम्··· इन्ध्वम् व ४३७:११§[i].

समिन्धयेत् शि ४,४९.

सम्-इद्ध- -द्धः बृ ६, ४,३; गी ४, ३७; -द्धे मुं १, २,२; बृ ६, ४, १२[४].

सम्-इध्[12]- -इत् छां ५,४-८,१; बृ ६, २,९-१३;१४[२]; शि ७,२६; -इधः मुं २, १, ५; ८; मना २, १२,१§[j];मुद्र१,६§[k]; शि४,३९; ४०;४२; ४३;६०; -इधम् छां ४,४,५;६-८,१; मना २,८०§[l].

समित्-पाणि- -णयः प्र १, १; छां ५,११,७; द १; -णिः मुं १, २,१२; छां ८,९,२;१०,३;११, २; कौ १,१;४,१८; -णी छां ८, ७,२.

समिद्-अग्नि-समुत्पन्न- -न्नम् बृजा ५,५.

समिद्-इन्धन- -नम् शि ६, २८३[m].

सम्-इ(ध>)धा[12]- -धाः त्रि ३[n].

समीकरण-,समीकृत- १सम- द्र.

समी(म्√ई)क्ष्,समीक्षामहे पिंब्र १, १; समीक्षस्व पिंब्र ६,२.

सम्-ईक्ष्य पिंब्र ३,८; गी १,२७.

समीची- समञ्च् द्र.

समीप[o]- -पे बृजा ४,७; वरा २,३९; सार २६२:८.

सामीप्य- -प्यात् सांका ७; ब्रसू ४,३,९.

समीप-ता- -ताम् कलि ३.

समी(म्√ई)र्,>रि,समीरयेत् योशि ३,६.

सम्-ईर- -रस्य यो १,२.

सम्-ईरण- -णः योशि १, १०४; यो १,१; -णम् योचू ९८; शां१, ७,१; -णे मैत्रि ७,११[२].

सम्-ईरित,ता- -तः ते १, ३२; मुद्र १,६;७; -ता मुद्र१,८; -ताः मुद्र १,६; वरा५,२८; -तौ बृजा ४, २०.

सम्-ईरितुम् शां १, ४[p].

सम्-उ(द्>)च्√चर्,>चारि, समुच्चरेत् ध्या १००; ब्रवि ५९.

समुच्-चार्य रार २,५३;६५; ७८; शि ७,६३; सुसु ५.

सम्-उ(द्>)च्√चि, समुच्चीयेरन् ब्रसू ३,३,६०.

समुच्-चय-

समुच्चय-विकल्प- -ल्पौ सांसू ३,२५.

सम्-उ(द्>)च्√छिद्, समुच्छिनेत्[q] यो २,२९;३०.

सम्-उ(द्>)च्√छि(<शि)ष्

समुच्-छिष्ट- -ष्टम् शि ६, २२०.

सम्-उ(द्>)च्√छ्रि(<श्रि)

समुच्-छ्रय- -यः शि २,२.

समुच्-छ्रित,ता- -तम् शि २,१४; -ताम् शि ६,११८.

सम्-उ(द्>)ज्√ज्वल्, समुज्ज्वलति त्रिवि ६,२३;७,२२.

समुज्-ज्वल- -लम् शि ६,१३७.

समुज्-ज्वलित- -तम् सि ५,१०; ६,८.

समु(म्√उ)ज्झ्

§[r]सम्-उज्झित- -तः अशि ६, ८.

सम्-उ(द्>)त्√कृष्

समुत्-कृष्य यो २,२८.

सम्-उ(द्>)त्√क्रम्

समुत्-क्रान्त- -न्तः नाद १३.

सम्-उ(द्>)त्√क्षिप्

समुत्-क्षिप्य शि ६, १६३.

सम्-उ(द्>)त्√तॄ>तिर्

समुत्-तीर्ण- -र्णः महा ५,१७४.

सम्-उत्था(द्>त्√स्था)>,तिष्ठ्, स्थापि,समुत्तिष्ठति छां८,२,१०; समुत्तिष्ठतः छां ८,२,६-८; समुत्तिष्ठन्ति छां ८,२,१-५;९.

---

a) =२काल- । वैप१ यद्र. । b) °यं भ्रा° इति निसा.? यनि. शोधः द्र. [एतदनु गपू. (पृ६२५) 'भ्रान्ति-हरण->-णम्' इत्यत्र शोधः कर्तव्यः]। c) =संप्रदाय- । d) =सभा । वैप१ यद्र. । e) ऋ ९,९४,४ । f) वैप१ यद्र. । g) °मिङ्ग°, °मेज° इति आन. संटि. । h) ऋ १,२२,२१ । i) ऋ १०,१०१,१ । j) तैआ १०,१०,१ । k) ऋ १०,९०,१५ । l) तैआ १०,६४,१ । m) गपू. (पृ१६६) सस्थ. 'इन्धन->-नम्' इत्यत्र यनि. शोधः कर्तव्यः । n) °मिद्धाः इति अज्या. संटि. । o) तु. वैप१, २२३h । p) °तम् इति अज्या. । q) श्नं च शश्चेति विकरणद्वयं (पा ३,१,८५) । r) 'समुब्जितः' इति शौ १०,२,२७; आन.।

समुत्तस्थौ कौ २,१४; ४,१८.

समुत्-थाप्य वरा ५,३४.

समुत्-थाय छां ८,३,४; १२,२;३; बृ २,४,१२;४,५,१३; ६,२,२; मै २,२; मैत्रि २,२; त्रिवि ८, १३;१७; शि ७,७२;१३९.

समुत्-थित,ता– -तः अन्न ५,९५; -तम् योशि २,५; -ता त्रिब्रा २, ७०; -ताः पै ३,१; अध्या ३६; -ते श्वे २,१२; त्रिब्रा २,७२.

सम्-उ(द्>)त्√पद्>पादि, समुत्पद्यते सार२२०:१; समुत्पद्यन्ते छां १,९,१; ना१; त्रिवि२,१६; संद.

समुत्-पत्ति– -त्तिः मुद्र १,५; -त्तिम् भव ४,१६.

समुत्-पद्य सार २४९ : ३.

समुत्-पद्यमान,ना– -नाः सार २८० : १५; २२.

समुत्-पन्न,न्ना– -न्नः कृ १७; -न्नम् सार २२४ : १४; -न्ना सी ६; सार २२०:१६; -न्नाः ध्या ५१; योचू १५; योशि ५,२०; सार २१९ : ६;२२० : ३;८;२२४: १६;२२७:२; २३१:१;२४३: ५;११; २५८ : १२;२७२ : ३; -न्ने ते ६,८१.

समुत्पन्न-सृष्टि– -ष्टयः सार २४५ : १८.

समुत्-पा(द्य>)द्या– -द्या सार २२२ : ३.

सम्-उ(द्>)त्√पॄ>पारि, समुदपारयत् बृ ६,४,२.

सम्-उ(द्>)त्√सृज्, समुत्सृजेत् क्षु ५[a].

समुत्-सृज्य ते ३, ७४; नाद ४१; अन्न ५,९५; जाद ४,५०;६१; वरा २,४४.

समुत्-स्रष्टुम् १योत १०८.

सम्-उद(द्√अ)स्(क्षेपणे)

समुद्-अस्त–

समुदस्ता(स्त-आ)श्रम–

समुदस्ताश्रमित– -तः आवो २.

सम्-उद्-आ√हृ

समुदा-हृत,ता– -तः १योत १२०; योशि १,१०७; यो १,४८; वरा ५,५८; -तम् महा २,३२; -ता महा ५,२४.

सम्-उदि[द्√इ(गतौ)], समुदेति अन्न १,५३.

समुद्-अय– -यम् मैत्रि ३, २[b]; -यात् सांका १६.

समुद्-आय– -यः मै ३, २[c]; -ये व्रसू २,२,८.

समुदाय-गुरु– -रुम् सूता २,६.

समुद्-इत– -तम् महा ५, ५२.

समुद्-ईयमान– -नम् त्रिता १, ५२.

समुद्-यत्–

समुद्यद्-अर्क–नि(भ>)भा–

-भाम् त्रिता १,८३.

सम्-उदी(द्√ई)र्

समुद्-ईरित,ता– -तः मुद्र १, ७; -ता वरा ४,१; -ताः अरु३३§[d].

सम्-उदी(द्√ई)षु, समुदीषति छां ६,६,१-४.

सम्-उद्√गम्

समुद्-गम– -मे अन्न ५,१११.

सम्-उद्√गॄ(निगरणे)>गिर्

समुद्-गीर्ण– -र्णम् शि ५, २..

सम्-उद्√दिश्

समुद्-दिश्य योशि १,१५७; शि ६, १६८.

सम्-उद्√धृ(<>हृ), समुद्धरते शि ६, २१७; ७, ४१; समुद्धर महा ५,१३५; समुद्धरेत् द ४; वरा ५,५६.

समुद्-धर्तृ– -र्ता गी १२,७.

समुद्-धृत्य ऐ १, ३; बृजा ७, १; काला ८; रार२,८६;९८;१०१; १०३; जाबा १६; शि ३,२;५, ५;७,१३२; सुमु ५.

सम्-उद्√भू, समुद्भवेत् सी ३२.

समुद्-भव– -वम् ऊ ६४ : १.

समुद्-भूत,ता– -तः सार २२८:२; २८९ : ३; -ता योचू ३५.

समुद्र°– -द्रः प्र ६, ५; छां २,४,१; १७,१; ३,१९,२; ४,६,३; ६, १०,१; बृ१,१,२[२];२,४,११;३, ३,२;४,५,१२; मना १,१३§[f]; १५§[g]; सुबा११[h];२ शिसं१३§[i]; -द्रम् प्र ६, ५; छां ६, १०, १; नाप ४,३८; १अव ७; त्रिता३, ३२; सु २९४; ६§[j]; व ४३० : १२; गी २,७०;११,२८; -द्रस्य सुबा ११[k]; व ४५९:१४; -द्राः मुं २, १,९; श्वे ४, ४; मना २, १२,१§[l]; बृजा ४,२४; योशि ६, ११; महा ३,५०; गु ३१; वउ ४,४२; -द्रात् छां ६,१०,१; मना १, १४§[m]; २, १२,२§[n]; जाद १०,६; -द्रान् इ १८ : १३; वउ ३,२२; -द्रे मुं ३,२,८; बृ १,१, २[२]; मना १,१§[o]; २,१३,२§[p]; महा१,१§[q]; दे३§[r]; जाद१०,७;

a) 'उच्छ्वसेत्' इति अज्या.। b) °दायः इति मै ३, २। c) °दयम् इति मैत्रि ३,२। d) तैआ १, २७,५। e) वैप१ यद्र.। f) ऋ १०,१९०,१। g) ऋ ९,९७,४०। h) °द्रः इत्यपि पाभे. (तु. उब्र.)। i) मा १७,२। j) ऋ ९,९६,१९। k) °द्रस्य इत्यपि पाभे. (तु. उब्र)। l) तैआ १०,१०,१। m) ऋ १०,१९०,२। n) ऋ ४, ५८,१। o) तैआ १०,१,३। p) तैआ १०, ११, २। °द्रेतम् इति नादी.। q) तैआ १०,११,१। °द्रेकम् इति अज्या.। r) ऋ १०,१२५,७।

च २० : १२§[a]; गु ३८; -द्रेषु गु ४३.
समुद्र-वेला- -ला मै ४, २; मैत्रि ४,२.
समुद्र-सलिल- -लस्य त्रिवि ८,२.
समुद्रा(द्र-अ)य(ए>)णा- -णाः प्र ६, ५.
सम्-उ(द्>)न्√नम्
समुन्-नत-
समुन्नत-शिरः-पाद- -दः त्रिशि २,४८[b]; शां १,३,११; जाद ३, ११.
सम्-उन्मनस्-
समुन्मनी°-
समुन्मनी√भू
समुन्मनी-भाव- -वः १आपू २.
सम्-उप√गम्
समुप-गम्य योशि १,९०.
सम्-उप√जन्>जा, समुपजायते मु २,२,४९.
सम्-उप√लभ्
समुप-लभ्य मवा ६.
सम्-उप√विश्, समुपविविशुः छां १,८,२.
समुप-विश्य छां १,१२,४.
सम्-उप√स्था
समुप-स्थित- -तः शु १,३; -तम् वपं ३१२:१६; गी १,२८;२,२; -ते योशि १, १०२; १संन्या २, १०३; यो १,४०.
सम्-उपा(प-आ)√गम्
समुपा-गत- -ते महा ४,५५.
सम्-उपा(प-आ)√दिश्, समुपादिशेत् मु १,१,२१.
सम्-उपा(प-आ)√श्रि, समुपाश्रय मु १,१,७.
समुपा-श्रित- -तः गी १८,५२.
सम्-उपा(प√आ)स्, समुपास्महे महा ६, १७-१९.
समुपा(प-आ)सित- -तः रापू ४, ३९.
सम्-उपा(प-आ)√स्था
समुपा-स्थाय अन्न ३, १.
सम्-उपे[प√इ(गतौ)], समुपैति गौ २, २९.
सम्-उ(द्>)ल्√लङ्घ्
समुल्-लङ्घ्य त्रिवि ६,१०.
सम्-उ(द्>)ल्√लस्
समुल्-लास- -सम् महा ४, ४३.
समूढ- सं√वह् द्र.
स[d]-मूर्ति- -र्तयः पा ९, १०.
स[d]-मूल- -लः प्र ६,१; -लम् बृ ३, ९,२८,६; महा ६,७; अन्न ४, ५४; -लस्य अध्या ५९.
समूलो(ल-उ)न्मूलित- -ते पै ३, १; अध्या ३९.
समू(म्√ऊ)ह्(वहने), समूहताम् सूता २,१३§[e]; समूह ई १६; बृ ५, १५,१§[f]; समूहेत् ज़ु १५!§[g].
सम्-ऊह- -हः ससा १, १२; -हाः सार २२३ : १७; २६३ : १६; २६४:७; २६६ : ३;२८४ : ७; -हेम सार २५३ : १८.
समूह-मध्य-स्थ- -स्थे सार २८६ : १०.
सम्-ऊह्य पा १०,२.
समृ(म्√ऋ)ध्, समृध्यते बृ ५,१४, ७; गा २४; समृध्यन्ति छां ७, १४,२; समृध्येत छां १,३,१२.
समृद्धि बृ ५,१४,७[h].
सम्-ऋद्ध- -द्धः बृ ४,३,३३; मुद्र ४; -द्धम् छां ५,२,८; मैत्रि ६, ३६[२]; अध्या ६३[i]; गी ११,३३; -द्धानाम् भव १,१२.
समृद्ध-काय- -यः मुद्र २.
समृद्ध-वेग- -गाः गी ११,२९[२].
सम्-ऋद्धि[१३]- -द्धयः सार २५३:१९; -द्धिः छां १, १,८; सौ १,३§[i]; -द्धिम् छां ५,२,९; -द्धयै मैत्रि ६, ३६.
समृद्धि-सुख- -खम् सार २५४: १७.
समे[म्-आ√इ(गतौ)]
समे(मा-इ)त,ता- -ताः द १; शि २, २०; ५, २४; पिंत्र १, ६; -तानाम् सार २५३ : १८.
समे(मा-इ)त्य छां ५,११,१; श्वे ६, ३; कश्रु २,१.
समैकात्म्य- १सम- द्र.
स[d]-मौक्तिक- -कम् शि ६, ९०.
सं√पत्
सं-पात[१२]- -तम् छां ५,२,४;५[४].
सं√पद्, >पादि, संपद्यते प्र ५, ४; छां ६, ८,६; १५,१;२; मैत्रि १, १; त्रबि ६;८; गर्भ ३[k]; नृपू ५, ३; त्रिब्रा २,१६२; मं २, ३,४; महा ४,९१; ५,१४६; अन्न ५, ७८; ७९; त्रिता ३, ५;१६; ५, ६; ८; जाद १०, ९; १०; गोपू १२[२]; आर्षे ९:९; निरु १, ११; २,१; २प्र ३४ : १६; ३५ : ७; अवि ६; ८; ब्रसू ४, १,१९; गी १३,३०; सम्...पद्यते बृ ६,१, ४[२]; संपद्यति मैत्रि ६, २७; संपद्यन्ते नृपू २,३; शि ७,४०; सम्...पद्यन्ते छां ५, १, ४; संपद्यामहे छां ६,९,२.
संपेदुः छां ४,४,५; ८, ११, ३; संपत्स्ये छां ६,१४,२.
संपादयन्ति अन्न २,७.

a) तैआ १०,११,२ । b) °दम् इति निसा., अड्या. संटि. । c) पा ५,४,५१ । d) =६स । e) तैब्रा ३, ७,६,२३ । f) का ४०, १, १६ । g) °हत् इति निसा.? यनि. शोधः द्र. (तु. अड्या.) । h) °मर्धि इति आन. संटि. । i) 'ऋद्धम्' इति निसा. संटि. । j) =शक्तिविशेष- । k) 'कुरुते' इति आन., अड्या.।

सं-पत्ति[3]– -त्तेः १अव ३१; ब्रसू १, २,३१.

संपत्ति-सुख-(ज्ञ>)ज्ञा[1]– -ज्ञा सार २६३ : १०.

सं-पद्[3]– -पत् छां ५, १,४; १४[2]; बृ ४,३,३२; ६, १,४;१४[2]; गी १६,५; -पदः बृ३,१,६; महा३, ५३; अत्रि २३; भव १, १८; -पदम् छां ५,१,४; बृ ६, १,४; गी १६, ३-५; -पदा योशि ६, ६८[a]; -पदे छां५,२,५;बृ६,३,२.

संपद्-प्रद– -दः ध्या १७.

संपद्-सारस्वत– -तौ ह ९.

संपद्-सुत-स्त्री-प्रलय– -ये भव १,५५.

सं-पद्य छां ६,९,२; ब्रसू ४,४,१.

सं-पद्यमान– -नैः प्र ३,९.

सं-पन्न– -न्नः प्र ५,३;५;छां६,८,१; ८,२,१-१०;६,३; -न्नम् महा२, ३८;१अव२९;आर्षे८:९; -न्नस्य आबो १६; -न्नाः मैत्रि ६, २२; -न्नाय दत्ता २[2]; व ४५६:१४[2].

संपन्न-तम– -मः बृ ४,३,३३.

*सं-पादया–

*संपादयां√कृ, संपादयांचकार छां ५,११,३; संपादयांचक्रुः छां ५, ११,२.

*संपादयाम(म्√अ)स(भुवि), संपादयामासुः पिंग्र १, २.

सं-पादित– -तम् सार २२३ : १९; -ताः सार २२३ : १०; -तानि सार २२३:११;२५४:१६.

सं-पाद्य नृउ ३,१०; वउ ६,५.

सं-पाद्य– -द्याः १योत १२३[b].

सं-परि√*गृह्

संपरि-गृह्य क १, २,१३.

सं-परि√त्यज्

संपरि-त्यज्य महा ४, ८;६,८; अन्न १,३२;४,६५;मु२,२,१८;६८.

सं-परि√वृ(आच्छादने)

संप(रि>)री-वृ(त>)ता– -ताम् अरु २४६[e].

सं-परि√ष्व(<स्व)ञ्ज्

संपरि-ष्वक्त– -क्तः बृ ४, ३,२१[2]; ब्रसू ३,१,१; -क्तौ बृ १,४,३.

सं-परी[रि√इ(गतौ)]

संपरी(रि-इ)त्य क १,२,२.

सं-परे[रा√इ(गतौ)]

संपरा(रा-अ)य– -ये इ १२:१२.

सांपराय– -यः क १, २,६; -ये क १,१,२९; नृपू२,१२; ब्रसू३, ३,२७.

सं√पश्, संपश्यति मु २, २, ५९; संपश्यध्वम् छाग २४ : २०; संपश्यध्वै छाग२४:१; संपश्येत् ब्रवि ५४[d]; जाद ५, १२.

सं-पश्यत्– -श्यन् कै १, १०; नाप ५,३६; गी ३,२०.

सं√पा(रक्षणे),संपायाः पा ४,५.

सं√पा(पाने)

सं-पीयमान–

संपीयमान-सौष्ठव– -वम् सार २३८ : २३.

संपात– सं√पत् द्र.

सं√पीड्>डि

सं-पीड्य नृउ ७, १२; ध्या ७४; १योत १२०; त्रिब्रा २,४९; योचू ४६; शां १, ३, ७; ९; ७,४३; महा ५, ७५; योशि १, १०४; मु २,२,४२.

सं√पुट्

सं-पुट– -टः वरा ५,४५; -टम् त्रिता ३,१९; अद्वै ११; सिशि ३८२: १०.

संपुटी√कृ

संपुटी-कृत्य त्रिता ३,१८.

सं-पुटित– -तः बृजा २,५[c]; -ताः सूता १,३३; -तौ ध्या ६९; योचू ४०.

सं√पुष्>पोषि

सं-पोष्यमाण– -णः सार २७४:१८.

सं-पुष्पित– -तस्य मना २,११६[f].

सं√पूज्>जि,संपूज्येत् रापू ५,६; भ २,२०; शि ७,७५.

*सं-पूजया–

*संपूजयाम(म्√अ)स(भुवि), संपूजयामासुः सार २४२:२३.

सं-पूजित– -तः त्रिवि ६,१७; शि ७,७३.

सं-पूज्य नृउ ३,१०[2]; शु १,१; त्रिवि ५,१३; शां १,५; भ२,२४;२६; सर १,१; लां २१४ : ३; शि १, २;२८; श्या १५; सुमु ११; वउ ६,१८.

सं√पृच्

सं-पर्क– -र्कात् शि ६, १८४;७, १०६.

सं√पॄ>पुर,पूरि,संपूर्यते छां५,३,३; १०,८; बृ ६,२,२.

सं-पूरित,ता– -तम् सार २२४:१९; -ताः सार २२५:२; २६४ : ७; -तानि सार २२३ : ६.

सं-पूर्ण– -र्णः महा२,२७; -र्णम् पाशु २,३५; रुद्र ५१; वरा २,२१;शि ६,२२४; -र्णाः सार २२३ : ८; २२४:२१; २३३ : २१;२४२: ६; २६९:५;६; २८३:१०;-र्णौ जाद ८,९.

संपूर्ण-कुम्भ–

संपूर्णकुम्भ-वत् त्रिब्रा२,९८; जाद ६,१३.

संपूर्ण-केवल– -लः महा २,७३[g].

संपूर्ण-चन्द्र–वद(न>)ना– -नाम् रा ४२४ : २२.

a) नवसं° इति अव्या. । b) °द्यः इति निसा. । c) तैआ १,२७,३ । d) प° इति अव्या. । e) °तम् इति अव्या. । f) तैआ १०,९,१ । g) उप. =१केवल– ।

संपूर्ण-चन्द्र-संकाश- -शम् ह ६.
?संपूर्णचन्द्रसूर्य- -र्यःते६,९३[a].
संपूर्ण-ता- -ताम् गोच६८:१४.
संपूर्ण-रूप-
संपूर्णरूपिन्- -पिणः पाशु२, ३४.
संपूर्ण-हृदय- -यः सौ २,६.
संपूर्णा(र्ण-आ)नन्दै(न्द-ए)क्-बोध[b]- -धः पप ४२० : १६.
सं-पूर्य शां १,७,१.
सं-पूर्यमाण,णा- -णम् सार २८१ : ९;-णाःसार२३३:१९;२१-२३.
सं-प्र√कट्
संप्र-कटित-
संप्रकटित-देह-संभव- -वाभ्याम् सार २४७ : २१.
सं-प्र√काश्
संप्र-काशित- -तः गौ ३, ११.
सं-प्र√कृ,संप्रकुर्यात् अद्वैभा १८.
सं-प्र√कृष्,संप्रकर्षति भव १,४०.
संप्र-कर्षण- -णे महा ५,१२१[c].
सं-प्र√कृत्>कीर्ति
संप्र-कीर्तित,ता- -तः गी १८, ४; -ताः शि ४, ६०.
सं-प्र√चक्ष्,संप्रचक्षते व्रवि १; १प्र ३० : ४.
सं√प्रच्छ्,>पृच्छ्, संपृच्छते शि ४, २९;संपृच्छसि इ १८:१४;सम-पृच्छत् इ १८ : १४;१५; १६[?].
सं-प्रश्न- -श्ने शि ७,७.
सं-प्र√च्छद्
संप्र-च्छन्न- -न्नः कौ २, १५[d].
सं-प्र√ज्ञा
संप्र-ज्ञात[ii]- -तः योसू १,१७.
संप्रज्ञात-समाधि- -धिः मु २, २,५३.
संप्रज्ञातसमाधि-तस(>:) वरा ४, ३८[e].
सं-प्रति[f] छां २,९,५; ५,११,२[g];४[g]; ६[g]; ८,११,१[h]:२; रापू ४,१६; महा ३,५५; सांसू ३,६.
सांप्रत-
सांप्रत-काल- -लम् सांका ३३.
संप्रत्य(ति-अ)वसित[i]- -तानाम् १संन्या २,४.
सं-प्रति√ष्ठा(<स्था),>ष्ठापि
संप्रति-ष्ठा- -ष्ठा गी १५,३.
संप्रति-ष्ठाप्य छां ८,१५,१; अ ३[?].
संप्रति-ष्ठित- -ताः प्र ४,१; व्र १; सुबा १०.
सं-प्र√दा(दाने)
संप्र-त्ति- -त्तिः बृ १,५,१७.
संप्र-दान- -नम् कौ २,१५.
सं-प्र√द्रु,संप्रद्रवते छाग २५ : २;३.
सं-प्र√बुध्,संप्रबुध्यते यो १,४५.
सं-प्र√मुच्
संप्र-मुच्य बृ ४,३,३६.
सं-प्र√°यच्छ्(दाने),संप्रयच्छति कौ २,१५; संप्रयच्छन्ति छां २,२४, ६;१०;१६.
सं-प्र√युज्,संप्रयुज्यते जाद ६,५१; संप्रयुज्यन्ते गौ ३,५.
संप्र-युक्त- -क्तम् मैत्रि ७,११; ते १,१२[j].
संप्र-योग- -गात् गर्भ ३[k].
सं-प्र√ली,संप्रलीयन्ते गौ ३,४.
सं-प्र√वच्,संप्रवक्ष्यामि क्षु १; योशि १,७९; यो२,१; जाद७-१०,१.
संप्रोच्यते योशि १,१५९.
संप्रो(प्र-उ)क्त- -क्तः ते १,१७; अन्न २,४.
सं-प्र√विश्
संप्र-विश्य शा ६.
संप्रवेश- -शे पप ४१८ : १६?[l].
सं-प्र√वृत्
संप्र-वृत्त- -त्तानि गी १४,२२.
सं-प्र√वृध्
संप्र-वृद्धि- -द्धिः भव ५, १३.
सं-प्र√सद्,>सीद्,संप्रसीदति महा ५, ६६.
संप्र-सन्न- -न्नः छां ८,६,३;११,१.
संप्र-साद- -दः छां ८,३,४;१२,३; मै २,२; मैत्रि २, २[m]; व्र १[n]; सुबा४; -दात् ब्रसू १, ३, ८; -दे बृ ४,३,१५.
सं-प्र√सू(प्रसवे),संप्रसूयन्ते अ ३.
संप्र-सूत- -ताः मुं २,१,५;७.
संप्रसूत-कलत्र- -त्राणि महा ३,७.
सं-प्र√स्था>तिष्ठ्,संप्रतिष्ठते प्र ४, ७; ९; संप्रतिष्ठन्ते प्र ४, ७; संप्रतिष्ठन्ति प्र ४,११.
सं-प्र√स्रु, संप्रास्रवत् छां २, २३,२; ३; मै४,५[?][o]; मैत्रि५,२; संप्रा-स्रवन्त छां २,२३,२.
सं-प्रा(प्र√आ)प्, संप्राप्नुवन्ति योशि १,१६१; सार २८०:६;७.
संप्राप्यते मै ४,३; मैत्रि ४, ३; मैत्रे १, ४,२; महा ३, १२;५, ११०; योशि १, १३६; १४०.
संप्रा(प्र-आ)स,सा- -सः गर्भ ४[p]; ध्या ८५; योचू ५९; -सा महा ५, ७२; -से त्रिब्रा २, १११;

a) पा.? °न्द्रः सू° इति शोधः द्र. । b) कस. + कस. >बस. । c) °र्षति इति अड्या. । d) °न्नम् इति अड्या. । e) असंप्रज्ञास° इति अड्या. । f) अव्य. वैप१ यद्र. । g) वैतु. JC. °प्रत्यधी° इति । h) वैतु. JC. संप्रति√ज्ञा इति । i) प्रास. उप. अधिकरणे क्तः । j) तत्त्वयु° इति आन. । k) °योगतः इति अड्या., प्रयो° इति आन. । l) निसा.? 'अपां प्रवेशो' इति शोधः द्र. (तु. अड्या.) । m) °सा३दः इति सात. । n) °रः इति आन. । o) सकृत् °वति इति निसा.? यनि. शोधः द्र. (तु. मैत्रि ५,२) । p) °से इति आन. ।

महा ४,३६; यो १,४३; भव १, ५७.

संप्रा(प्र-आ)प्य मुं ३, २, ५; शां १, ४; महा ५, १४४; गोउ २७[a]; शि ४,५४.

सं-प्रा(प्र√अ)र्थ्>र्थि

संप्रा(प्र-अ)र्थित- -तः सार २३०: १७; २५८ : ५.

संप्रा(प्र-अ)र्थ्यमान- -नः सं ९.

सं√प्री

सं-प्रीयमाण-

संप्रीयमाण-मनस्- -नसः सार २४५ : १६.

सं-प्रे(प्र√ई)क्ष्, संप्रेक्षामहे सार २१९ : ३.

संप्रे(प्र-ई)क्ष्य गी ६,१३.

संप्रोक्त- संप्र√वच् द्र.

सं-प्रो(प्र√उ)च्

संप्रो(प्र-उ)क्ष्य भ १,४;५.

सं√प्लु,संप्लवते छां २,४,१; संप्लवन्ते छां २,१५,१.

सं-प्लुत-

संप्लुतो(त-उ)दक- -के गी २, ४६.

सं√प्सा

सं-प्साय वृ ५, १४,८; गा २८?[b].

सं√बन्ध्

सं-बद्ध- -द्धम् योशि १,५९.

संबद्धा(द्ध-आ)सन-मेढ़- -ढ्म् योचू ११४[c].

सं-बध्य त्रिब्रा २,४२.

सं-बन्ध- -न्धः कुं १५; सार२३१: १२; सांसू ५, ९८; -न्धस्य ब्रसू ४,२,१९; -न्धात् ब्रसू३,३,२०; ४,३,३; -न्धे महा ५,४८.

संबन्ध-त्रय- -यम् ते ५, ३५.

संबन्ध-नित्यता- -ता सांसू ५, ९७.

संबन्ध-वर्जित- -तःजाद२,११.

संबन्ध-संयम- -मात् योसू ३, ४२;४३;

संबन्ध-सिद्ध- -द्धम् सांसू १, ८९[d].

संबन्ध-सिद्धि- -द्धिः सांसू ५, २८; -द्धेः सांसू ५,३८.

संबन्धा(न्ध-अ)नुपपत्ति- -त्तेः ब्रसू २, २,३८.

संबन्धा(न्ध-अ)भाव- -वात् सांसू ५,११.

संबन्धा(न्ध-अ)र्थ- -र्थम् सांसू ५, १०७.

संबन्धा(न्ध-आ)लाप-कीर्तन-गोष्ठी-मार्गा(र्ग-अ)नुभव- -वात् सार २२७ : १३.

संबन्धिन्- -न्धिनः शा ३०; गी १,३४.

सं√बाध्

सं-बाध- -धम् इ १५ : १०.

सं√बुध्>बोधि, संबोधयेत् गौ ३, ४४.

सं-बुद्ध- -द्धः गौ ४,१; ३५.

सं-बुद्धि[११]- -द्धिः दत्ता १,५; ७.

सं-बोद्धुम् यो २,१०.

सं-बोधन[११]-

संबोधन-द्वय-पुष्टि(त>)ता- -ताम् गुषो ४२० : ९.

सं-बोधयितृ- -ता मै ५,४?[e]; मैत्रि ६,४.

सं-बोध्य पी ४२१ : ९.

सं√भज्

सं-भक्षण- -णेन अशि ४,१५; वट्ठ ३१६ : ८.

सं-भक्ष्य अशि ४,१५[f]; नृउ ४,५; ७,१२; वट्ठ ३१६ : ८.

संभव- सं√भू द्र.

संभार- सं√भृ द्र.

संभावित-, संभाविन्-, संभाव्य सं√भू द्र.

सं√भाष्>षि,संभाषेते सार २६६: १७; संभाषेत् नाप ४,३.

संभाष्येत् शि ७,१६.

संभाष्यते व १६.

संभाषयेत् २कौल १२.

सं-भाषण- -णम् ते २,३०; नाप५, १; ६, ३२; सार २३१ : २२; २३५:४-६;८;१२; २७३ : ७; -णात् सार २८३ : २.

सं-भाषमाण,णा- -णः कौ २, ४; -णाः,-णान् सार २७६:१; -णौ सार २८९ : १२.

सं-भाष्यमा(ण>)णा- -णा सार २८७ : ६.

सं√भिद्

सं-भिद्य यो १,६९.

सं√भुज्,संभुञ्जते सार २३९ : १५; २८० : १.

संभोक्ष्यते सार २५९ : १८;

संभोक्ष्यन्ते सार २३९ : १६.

सं-भुञ्जमान- -नाः सार २८८:१४.

सं-भुञ्जा(न>)ना- -नाःसार२७४: २१.

सं-भोक्ष्यमाण,णा- -णः सार २४०:८; -णा सार २८४:११; २८६ : २१; -णाः सार २६३ : १६; २७३ : २१; २८१ : १३; २८३:२३;२८४:८; २८८ : २.

सं-भोग- -गः महा ५, १७१; -गैः शि ६, २६०.

संभोग-चटु-चाटु-वचन- -नाय सार २५१ : २०.

संभोग-प्राप्ति- -प्तिः ब्रसू१,३,८.

a) 'प्रथमाम्' इति श्रान.। b) तु. गपू. पृ८३१q। c) °दृष्वाऽऽस° इति श्रञ्ज्या.। d) 'संबद्धं सत्' इत्यपि पाभे.। e) गपू. (पृ७०६, ५८०) सस्थ. 'रस->-सम्' इत्यत्र 'बोधयीत' इत्यत्र च यनि. शोधः कर्तव्यः (तु. नाउ.)। f) 'उद्गृह्णाति' इति श्रान.।

संभोग-प्रिय– -याय सार २६०: २१.
संभोग-लीला– -लायाम् सार २८७ : १८.
संभोग-व(त>)ती[१]– -ती सार २३४ : ६.
संभोग-वश– -शात् गोच ६७: १६.
संभोग-सुख– -खम् सार २८० : ६.
संभोगसुख-(द>)दा[१]– -दा सार २२३ : ४.
संभोग-स्थान– -ने सार २८४:७
संभोगिन्– -गिने सार २५१: १५.
संभोगे(ग-इ)च्छा– -च्छाम् रा ४२४ : २२.
सं-भोज(न>)नी[११]– -नी इ १२: १७.
सं-भोज्य– -ज्याः सार २३७:१८.
सं√भू(*बधा.),>भावि, संभवति क २,१,७; मुं १,१,७; छां ५,४-८, २; बृ १,४,४; ५,१४,८; ६,२, ९-१४; महा ४, ४९; अत्र १, २५; ४,७; त्रिता ४,२६; जाद ६, १५; निरु १, ३; ६; १३; २प्र ३७ : २; सार २३९ : ८; संभवन्ति मुं १,१,७; शां १,४; महा ६,१३; सार २६० : ३; २६३ : १४; २६७ : ३; २८८: १०; गु २६; गी १४, ४; संभवसि बृ६,४,९§[a]; कौ२,११§[a]; संभवामि गी ४,६;८; समभवत् ऐ ४,६[२]; ५,४[२]; छां ३,१९,१; बृ १,२,४;७;४,३; ना ४; बृजा १,१; नृपू १,१; सुबा१; वा १८; आबो १[२]; १कौल शां; वपू१,२; सम्…अभवत् बृ १, ४, ४[३]; समभवन् गोच ६६ : १८; संभवेत् ते १,३८;५,२२;६,८५; वरा ५,५; सांसू २,४४.
संबभूव मुं १,१,१; मना१,४§[b]; नाप ४,३८§[c]; योचू ७२; अत्र ३;१९; गु ७४; संबभूवतुः बृ १, १,२; संबभूवुः सिशि ३८१:७.
संभावयेत् त्रिता ५, ७.
संभावयिष्यसि पा २,६.
संभाव्यते ते ५,४९.
सं-भव– -वः बृ ३,९,२८,५; गौ ३, २५;४८;४,३८;७१; सुबा ६; ते ५,५३; पिं ७;१७; सार २९१: १७; गी १४,३; -वम् भव १,५; -वाः त्रिब्रा २,६; -वात् ई १३; ब्रसू १, ३,२६; ४,१,७; -वे श्वे ३,१; गौ ३,९; ४,१६[२]; सांसू १,४.
संभव-व्यत्यय-क्रम– -मात् मु २,२,५०.
सं-भावित,ता– -तस्य गी २,३४; -ताः सार २८२ : ८.
संभावित-जित-रसिकशिरोमणि– -णये सार २५२ : १.
संभावित-रस-(ज्ञ>)ज्ञा[१]– -ज्ञा सार २६३ : ६.
सं-भाविन्–
संभावि-तत्त्वा(त्त्व-अ)नुसंधान– -नम् अध्या ३३.
सं-भाव्य नृउ ४,३; राउ ३,१[d]; विया ४; वउ १,१८; ५,४४; ६,१७.
सं-भूत– -तः तै २,१,१; छां ५,९, २; मैत्रि ६,१९; मना १,३§[e]; कौ १,६; योचू ७२; पै १,१६; करु १३; गोउ १३[f];४४?[g]; नाउ १,१५§[h]; -तम् ऐ ४,१; गोउ ३९[i]; -तैः कुं २१.
सं-भूति– -तिम् ई १४; -तेः गौ ३, २५; -त्या ई १४; -त्याम् ई १२.
सं√भृ
सं-भार– -रम् वउ ६,१३.
संभार-वत्– -वान् महा६,७०[j].
सं-भृत– -तम् मैत्रि ६,१४; गोच ६९ : ४.
सं-भृति–
संभृति-श्रुत्यासि[k]– -सि ब्रसू ३, ३,२३.
सं-भृत्य बृ ६,३,१; २संन्या १५:३.
सं√*भृष्(<भ्रस्ज्)
सं-भृष्ट–
संभृष्ट-बीज–
संभृष्टबीज-वत् मु २, २, ६३.
संभोक्ष्यमाण– सं√भुज् द्र.
सं√भ्राज्, संभ्राजते सार २३९:३.
सं√*मज्ज्(<मस्ज्), सम्… मज्जन्ति कौ १,४[l].
सं√मन्,>मानि
सं-मत– -तम् महा५,१३२;योरा३.
सं-मान– -नात् नाप ३,४०.
सं-मानन– -नम् नाप ४,८?[m]; ५, २९.
सं√मन्त्रि(<मन्त्र-)
सं-मन्त्र्य गौ ४,३५.
संमर्श–, संमर्शिन्– सं√मृश् द्र.
सं√मा(माने)
सं-मित– -तः अत्र५,१३;-तम् मना २,३४§[n]; नृपू ५,२-५; महा ५, १४९; आर्षे ८ : ९; इ ११ : २; २शिसं २.

a) संश्र° इति मंत्रा १,५,१६ । b) 'सुंविवेश' इति मा ३२, ११ । c) तैआ ७,४,१ । d) °व्यः इति अध्या. । e) तैआ १०,१,३ । f) अंशभू° इति आन. । g) तु. गपू. पृ८०७J । h) तैआ ८,१,१ । i) भू° इति आन. । j) संसार° इति अध्या. । k) समाहारे द्वस. । l) गपू. (पृ६२६) √मज्ज्>मज्जन्ति इत्यत्र सस्थ. यनि. शोधः कर्तव्यः । m) सन्मा° इति पा.? यनि. शोधः द्र. । n) तैआआ १०,३४ ।

